विद्योदयग्रन्थमाला १—प्रथमं पुष्पम् ॥

॥ श्रीः ॥

श्रीशृङ्गेरी जगद्गुरुमहासंस्थानं श्रीशारदापीठम् ।

# ॥ श्रीमच्छङ्करदिग्विजयः ॥

मूलमात्रात्मकः ॥

*Edited by*

N. S. Ananthakrishna Sastri,

Vedantha Siromani,

Nurani, PALGHAT



*Published on the occasion of the Chathurmasya of His Holiness at Kaladi on 1st September 1956*

by

THE SRINGERI MATH,

SRINGERI

## ॥ विषयानुक्रमणिका ॥

श्री जगद्गुरु श्रीशृङ्गगिरिसंस्थान-

श्रीमदभिनवविद्यातीर्थस्वामिचरणाः ॥

॥ श्रीरस्तु ॥

श्रीगुरुचरणारविन्दाभ्यां नमः ॥

# ॥ प्रस्तावना ॥

---

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

निश्चप्रचमिदं समेषामास्तिकमहाशयानाम्, यत्, करुणावरुणालयो भगवांस्तरुणेन्दुशेखरः समुद्दिधीर्षुरिमं मानवं लोकमुरीकृत्य मार्त्यं शरीरमवातरत् पृथिव्यां श्रीशङ्करनाम्नेति। पञ्चम एव वयस्यवाप्तोपनयन-संस्कारोऽसौ सकला अपि कला अनायासेनाचिरादधिगम्याष्टम एव वयसि समधिगततुरीयाश्रमः स्वशेमुषीचातुरीविजिताखिलविद्वन्मण्डलो भगवतो बालेन्दुमौलेः परमेश्वरस्यानितरसुलभां प्रसादस्य परां काष्ठा-मधिरूढोऽथ च भगवतो द्वैपायनाच्चानन्यसुलभमाशीर्विशेषं चावाप्य "भगवत्पादसंज्ञां, परमाचार्याभिधां" च समार्जयत्, इतीदं विस्मय-मानन्दभरं चादधाति भारतीयानामखिलानामपि मानवानाम् ।

चिन्तामणिर्लोकसुखं सुरद्रुः स्वर्गसम्पदम् ।
प्रयच्छति गुरुः प्रीतो वैकुण्ठं योगिदुर्लभम् ॥

इति हि गुरोर्महिमोद्घुष्यते । भगवान् कपिलो हि देवहूत्यास्तपोमहिम्ना भाग्यातिशयाच्चात्मजभावमुपेत्य तपोनिधिं जनकं कर्दमं तपश्चरणायानु-मान्य परिव्राजकपदवीमधितिष्ठति तस्मिन् साध्वीकुलललामभूतायै स्वजनन्यै परमामध्यात्मविद्यां गुरुमूर्तिः सन् उपादिक्षत् । प्रापयच्च तां योगिजनदुर्लभां वैकुण्ठपदवीमिति च श्रीमद्भागवतशास्त्रमवबोधयति । प्रकृते च भगवान् संयमिचक्रवर्ती श्रीशङ्करभगवत्पादो मातुश्चरमां दशामात्मनो योगशक्त्याऽवगत्य तेनैव योगमहिम्ना विजययात्राप्रसङ्गेऽ-ध्युषितात् श्रीशृङ्गगिरिक्षेत्रात् कालटीक्षेत्रमात्मनः प्रादुर्भावभूमिं मातुरा-वसथं च प्रत्यागत्य भगवन्तं रमारमणमस्तौत्, अगमयच्च प्रसवित्री-मात्मनोऽप्राकृतां पुनरावृत्तिरहितामकुण्ठां वैकुण्ठपदवीमित्यहो! अनि-र्वर्णनीयः सतीकुलतिलकीभूतायास्तत्तादृश्या वनितामणेस्तथाऽमोघ-सङ्कल्पस्य भगवतः शङ्करस्य च प्रभावविशेषो न मनसो वचसोऽपि वा

गोचर इति । एवमनेके मानवाः पुनरावृत्तिरहितं मुक्तिसुखं प्रापिता इति करुणासागरस्य श्रीमच्छङ्करभगवत्पादमुनेर्वदान्यता न तुलामोरहति ॥

"ज्ञानं महेश्वरादिच्छेत्, मोक्षमिच्छेज्जनार्दनात्" इति चाभियुक्तानां वाचमर्थवतीं बोधयन् श्रीशङ्करभगवत्पादोऽज्ञानोपहतान् जनानात्मविद्योपदेशेन निराकृताविद्याकानापादयन् सन्ततानुसन्धीयमाननारायणस्वरूपोऽभ्यस्यमानतन्नामधाराकश्च हरिहरयोः प्रसादमेवात्यन्तिकश्रेयःसाधनमखिलानप्यास्तिकान् विशेषेण बोधयति स्म । तत्तादृक्षस्य भगवतः श्रीशङ्करभगवत्पादस्य लीलाविशेषावबोधकोऽयं माधवीयोऽथवा विद्यारण्यकीयो ग्रन्थो द्रविड (तमिऴ्) भाषायामनूद्य मुद्राप्य प्रकाशितो विधेयतमेनानेन दासजनेन । आस्तिकजनतायाः पारायणस्य सुकरतामालोच्य मूलमात्रात्मकश्चायमन्यो भागः क्वचित् क्वचित् लघुटिप्पणीसंवलितो मुद्रापणाय समभिलषितः ॥

सोऽयमभिलाषोऽकिञ्चनस्यास्य सज्जनविधेयस्य, यमनियमाद्यष्टाङ्गयोगानुष्ठानपारावारपारीणानां श्रीशृङ्गगिरिव्याख्या महासिंहासनमलंकुर्वतां सन्ततशारदावरिवस्यावशीकृतान्तःकरणानां परमहंसपरिव्राजकाचार्याणां श्रीमदभिनवविद्यातीर्थभारतीस्वामिचरणानां प्रसादप्रभावेणानुगृहीत इति धन्यधन्योऽयं समजनीति नासकृद्वचनेनाप्यात्मानं तोषयितुमलम् ॥

'विद्योदयग्रन्थमाले'ति नामनिर्देशपूर्वकं मुद्राप्य प्रकाशं जिगमिषितेषु ग्रन्थेष्वयं ग्रन्थः प्राथमिकं प्रसूनपदं लभतामिति चानवरतानतिपूर्वकं प्रार्थयता सप्रश्रयं समर्प्यतेऽयमुपहारः ॥

श्री १००८-मतां विश्वजनीनाचरितानां श्रीचरणानां दुर्मुखनाम संवत्सरीय-चातुर्मास्यव्रतानुष्ठानबद्धदीक्षाणामादिभगवत्पाद—श्रीशङ्कराचार्याविर्भावभुवं कालटीक्षेत्रं निजचातुर्मास्यव्रतानुष्ठानाय पवित्रीकुर्वतां श्रीशृङ्गगिरिजगद्गुरुचरणारविन्दानां तत्तादृशचातुर्मास्यव्रतानुष्ठानकाल एव समर्प्यमाणोऽयमुपहारः प्रसादपरम्परा विश्वजनीनाः पुष्णात्विति च भूयोभूयोऽभ्यर्थये ॥

इति विधेयतमः

**N. S. Ananthakrishna Sastry,**

*Retired Sanskrit Pandit.*

PALGHAT,
25–8–1956

पुमर्थाश्चत्वारः किमुत निगमा ऋक्प्रभृतयः
प्रभेदा वा मुक्तेर्विमलतरसालोक्यमुखराः ।
मुखान्याहो धातुश्चिरमिति विमृश्याथ विबुधा
विदुः शिष्यान् हस्तामलकमुखराञ्छङ्करगुरोः ॥

[सर्ग १२—श्लोक ८७]

॥ श्रीः ॥

ओं तत्सद्ब्रह्मणे नमः

श्री गुरुचरणारविन्दाभ्यां नमः

ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः

श्रीविद्यारण्यविरचितः

# ॥ श्रीमच्छङ्करदिग्विजयः ॥

## प्रथमः सर्गः

### उपोद्धातः

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
प्राचीनशङ्करजये सारः संगृह्यते स्फुटम् ॥ १

यद्वद्घटानां पटलो विशालो विलोक्यतेऽल्पे किल दर्पणेऽपि ।
तद्वन्मदीये लघुसंग्रहेऽस्मिन्नुद्वीक्ष्यतां शाङ्करवाक्यसारः ॥ २

यथाऽतिरुच्ये मधुरेऽपि रुच्युत्पादाय रुच्यान्तरयोजनाऽर्हा ।
तथेष्यतां प्राक्कविहृद्यपद्येष्वेषाऽपि मत्पद्यनिवेशभङ्गी ॥ ३

स्तुतोऽपि सम्यक्कविभिः पुराणैः कृत्याऽपि नस्तुष्यतु भाष्यकारः ।
क्षीराब्धिवासी सरसीरुहाक्षः क्षीरं पुनः किं चकमे न गोष्ठे ॥ ४

पयोब्धिविवरीसुनिःसृतसुधाझरीमाधुरी-
धुरीणभणिताधरीकृतफणाधराधीशितुः ।
शिवङ्करसुशङ्कराभिधजगद्गुरोः प्रायशो
यशो हृदयशोधकं कलयितुं समीहामहे ॥ ५

क्वेमे शङ्करसद्गुरोर्गुणगणा दिग्जालकूलङ्कषाः
कालोन्मीलितमालतीपरिमलावष्टंभमुष्टिंधयाः ।
क्वाहं हन्त तथाऽपि सद्गुरुकृपापीयूषपारम्परी-
मग्नोन्मग्नकटाक्षवीक्षणबलादस्ति प्रशस्ताऽर्हता ॥ ६

धन्यंमन्यविवेकशून्यसुजनंमन्याब्धिकन्यानटी-
नृत्योन्मत्तनराधमाधमकथासंमर्ददुष्कर्दमैः ।
दिग्धां मे गिरमद्य शङ्करगुरुक्रीडासमुद्यद्यशः-
पारावारसमुच्चलज्जलझरैः संक्षालयामि स्फुटम् ॥ ७

वन्ध्यासूनुखरीविषाणसदृशक्षुद्रक्षितीन्द्रक्षमा-
शौर्यौदार्यदयादिवर्णनकलादुर्वासनावासिताम् ।
मद्वाणीमधिवासयामि यमिनस्त्रैलोक्यरङ्गस्थली-
नृत्यत्कीर्तिनटीपटीरपटलीचूर्णैर्विकीर्णैः क्षितौ ॥ ८

पीयूषद्युतिखण्डमण्डनकृपारूपान्तरश्रीगुरु-
प्रेमस्थेमसमर्हणार्हमधुरव्याहारसूनोत्करः ।
प्रौढोऽयं नवकालिदासकवितासन्तानसंतानको
दद्यादद्य समुद्यतः सुमनसामामोदपारम्परीम् ॥ ९

सामोदैरनुमोदिता मृगमदैरानन्दिता चन्दनै-
र्मन्दारैरभिवन्दिता प्रियगिरा काश्मीरजैः स्मेरिता ।
वागेषा नवकालिदासविदुषो दोषोज्झिता दुष्कवि-
व्रातैर्निष्करुणैः क्रियेत विकृता धेनुस्तुरुष्कैरिव ॥ १०

यद्वा दीनदयालवः सहृदयाः सौजन्यकल्लोलिनी-
दोलान्दोलनखेलनैकरसिकस्वान्ताः समन्तादमी ।
सन्तः सन्ति परोक्तिमौक्तिकजुषः किं चिन्तयाऽनन्तया
यद्वा तुष्यति शङ्करः परगुरुः कारुण्यरत्नाकरः ॥ ११

उपक्रम्य स्तोतुं कतिचन गुणाञ्छङ्करगुरोः
प्रभग्नाः श्लोकार्धे कतिचन तदर्धार्धरचने ।

अहं तुष्टूषुस्तानहह कलये शीतकिरणं
　करा‌भ्यामाहर्तुं व्यवसितमतेः साहसिकताम् ॥　　१२

तथाऽप्युज्जृम्भन्ते मयि विपुलदुग्धाब्धिलहरी-
　ललत्कल्लोलालीलसितपरिहासैकरसिकाः ।
अमी मूकान्वाचालयितुमपि शक्ता यतिपतेः
　कटाक्षाः किं चित्रं भृशमघटिताभीष्टघटने ॥　　१३

अस्मज्जिह्वाग्रसिंहासनमुपनयतु स्वोक्तिधारामुदारा-
　मद्वैताचार्यपादस्तुतिकृतसुकृतोदारता शारदाम्बा ।
नृत्यन्मृत्युञ्जयोच्चैर्मुकुटतटकुटीनिःस्रवत्स्वःस्रवन्ती
　कल्लोलोद्वेलकोलाहलमदलहरीखण्डपाण्डित्यहृद्याम् ॥　१४

क्वेदं शङ्करसद्गुरोः सुचरितं क्वाहं वराकी कथं
　निर्बध्नासि चिरार्जितं मम यशः किं मज्जयस्यम्बुधौ ।
इत्युक्त्वा चपलां पलायितवतीं वाचं नियुङ्क्ते बलात्
　प्रत्याहृत्य गुणस्तुतौ कविगणश्चित्रं गुरोर्गौरवम् ॥　　१५

रूक्षैकाक्षरवाङ्निघण्टुशरणैरौणादिकप्रत्यय-
　प्रायैर्हन्त यङन्तदन्तुरतरैर्दुर्बोधदूरान्वयैः ।
क्रूराणां कवितावतां कतिपयैः कष्टेन कृष्टैः पदै-
　र्हाहा स्याद्वशगा किरातविततेरेणीव वाणी मम ॥　　१६

नेता यत्रोल्लसति भगवत्पादसंज्ञो महेशः
　शान्तिर्यत्र प्रकचति रसः शेषवानुज्वलाद्यैः ।
यत्राविद्याक्षतिरपि फलं तस्य काव्यस्य कर्ता
　धन्यो व्यासाचलकविवरस्तत्कृतिज्ञाश्च धन्याः ॥　　१७

तत्रादिम उपोद्घातो द्वितेये तु तदुद्भवः ।
तृतीये तत्तदमृतान्धोवतारनिरूपणम् ॥　　१८

चतुर्थसर्गे तच्छुद्धाष्टमप्राक्चरितं स्थितम् ।
पञ्चमे तद्योग्यसुखाश्रमप्राप्तिनिरूपणम् ॥　　१९

महताऽनेहसा येषा सम्प्रदायागता गता ।
तस्याः शुद्धात्मविद्यायाः षष्ठे सर्गे प्रतिष्ठितिः ॥ २०

तद्व्यासाचार्यसन्दर्शविचित्रं सप्तमे स्थितम् ।
स्थितोऽष्टमे मण्डनार्यसंवादो नवमे मुनेः ॥ २१

वाणीसाक्षिकसार्वज्ञनिर्वाहोपायचिन्तनम् ।
दशमे योगशक्त्या भूपतिकायप्रवेशनम् ॥ २२

बुद्ध्वा मीनध्वजकलास्तत्प्रसङ्गप्रपञ्चनम् ।
सर्ग एकादशे तूग्रभैरवाभिधनिर्जयः ॥ २३

द्वादशे हस्तधात्र्यार्यतोटकोभयसंश्रयः ।
वार्तिकान्तब्रह्मविद्याचालनं तु त्रयोदशे ॥ २४

चतुर्दशे पद्मपादतीर्थयात्रानिरूपणम् ।
सर्गे पञ्चदशे तूक्तं तदाशाजयकौतुकम् ॥ २५

षोडशे शारदापीठवासस्तस्य महात्मनः ।
इति षोडशभिः सर्गैर्व्युत्पाद्या शाङ्करी कथा ॥ २६

सैषा कलिमलच्छेत्री सकृच्छ्रुत्याऽपि कामदा ।
नानाप्रश्नोत्तरै रम्या विदामारभ्यते मुदे ॥ २७

एकदा देवता रूप्याचलस्थमुपतस्थिरे ।
देवदेवं तुषारांशुमिव पूर्वाचलस्थितम् ॥ २८

प्रसादानुमितस्वार्थसिद्धयः प्रणिपत्य तम् ।
मुकुलीकृतहस्ताब्जा विनयेन व्यजिज्ञपन् ॥ २९

विज्ञातमेव भगवन्विद्यते यद्धिताय नः ।
वञ्चयन्सुगतान् बुद्धवपुर्धारी जनार्दनः ॥ ३०

तत्प्रणीतागमालम्बैर्बौद्धैर्दर्शनदूषकैः ।
व्याप्तेदानीं प्रभो धात्री रात्रिः संतमसैरिव ॥ ३१

वर्णाश्रमसमाचारान्द्विषन्ति ब्रह्मविद्विषः ।
ब्रुवन्त्याम्नायवचसां जीविकामात्रतां प्रभो ॥ ३२

न सन्ध्यादीनि कर्माणि न्यासं वा न कदाचन ।
करोति मनुजः कश्चित्सर्वे पाखण्डतां गताः ॥ ३३

*श्रुते पिदधति श्रोत्रे क्रतुरित्यक्षरद्वये ।
क्रियाः कथं प्रवर्तेरन् कथं क्रतुभुजो वयम् ॥ ३४

शिवविष्ण्वागमपरैर्लिङ्गचक्रादिचिह्नितैः ।
पाखण्डैः कर्म संन्यस्तं कारुण्यमिव दुर्जनैः ॥ ३५

अनन्येनैव भावेन गच्छन्त्युत्तमपूरुषम् ।
श्रुतिः साध्वी मदर्शीबैः का वा शाक्यैर्न दूषिता ॥ ३६

सद्यः कृत्तद्विजशिरःपङ्कजार्चितभैरवैः ।
न ध्वस्ता लोकमर्यादा का वा कापालिकाधमैः ॥ ३७

अन्येऽपि बहवो मार्गाः सन्ति भूमौ सकण्टकाः ।
जनैर्येषु पदं दत्त्वा दुरन्तं दुःखमाप्यते ॥ ३८

तद्भवान् लोकरक्षार्थमुत्साद्य निखिलान् खलान् ।
वर्त्म स्थापयतु श्रौतं जगद्येन सुखं व्रजेत् ॥ ३९

इत्युक्त्वोपरतान्देवानुवाच गिरिजाप्रियः ।
मनोरथं पूरयिष्ये मानुष्यमवलम्ब्य वः ॥ ४०

---

* सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥

यज्ञो दानं तपः कर्म पावनानि मनीषिणाम् ।
त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ॥

ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥

इत्यादीनी भगवद्गीतावचनानि यज्ञादीनामवश्यानुष्ठेयत्वमुपदिशन्ति ।

दुष्टाचारविनाशाय धर्मसंस्थापनाय च ।
भाष्यं कुर्वन्ब्रह्मसूत्रतात्पर्यार्थविनिर्णयम् ॥ ४१

मोहनप्रकृतिद्वैतध्वान्तमध्याह्नभानुभिः ।
चतुर्भिः सहितः शिष्यैश्चतुरैर्हरिवद्भुजैः ॥ ४२

यतीन्द्रः शङ्करो नाम्ना भविष्यामि महीतले ।
मद्वत्तथा भवन्तोऽपि मानुषीं तनुमाश्रिताः ॥ ४३

तं मामनुसरिष्यन्ति सर्वे त्रिदिववासिनः ।
तदा मनोरथः पूर्णो भवतां स्यान्न संशयः ॥ ४४

ब्रुवन्नेवं दिविषदः कटाक्षानन्यदुर्लभान् ।
*कुमारे निदधे भानुः किरणानिव पङ्कजे ॥ ४५

क्षीरनीरनिधेर्वीचिसचिवान् प्राप्य तान् गुहः ।
कटाक्षान्मुमुदे रश्मीनुदन्वानैन्दवानिव ॥ ४६

अवदन्नन्दनं स्कन्दममन्दं चन्द्रशेखरः ।
दन्तचन्द्रातपानन्दिवृन्दारकचकोरकः ॥ ४७

शृणु सौम्य वचः श्रेयो जगदुद्धारगोचरम् ।
काण्डत्रयात्मके वेदे प्रोद्धृते स्याद् द्विजोद्धृतिः ॥ ४८

तद्रक्षणे रक्षितं स्यात्सकलं जगतीतलम् ।
तदधीनत्वतो वर्णाश्रमधर्मततेस्ततः ॥ ४९

इदानीमिदमुद्धार्यमितिवृत्तमतः पुरा ।
मम गूढाशयविदौ विष्णुशेषौ समीपगौ ॥ ५०

मध्यमं काण्डमुद्धर्तुमनुज्ञातौ मयैव तौ ।
अवतीर्यांशतो भूमौ सङ्कर्षणपतञ्जली ॥ ५१

---

*कुत्सितो मारः यस्मात्, सः कुमारः । अथवा कुत्सितान् मारयतीति कुमारः इति द्विधा कुमारशब्दनिर्वचनम् ॥

मुनी भूत्वा मुदोपास्तियोगकाण्डकृतौ स्थितौ ।
अग्रिमं ज्ञानकाण्डं तूद्धरिष्यामीति देवताः ॥　　५२

सम्प्रति प्रतिजाने स्म जानात्येव भवानपि ।
जैमिनीयनयाम्भोधेः शरत्पर्वशशी भव ॥　　५३

विशिष्टं कर्मकाण्डं त्वमुद्धर ब्रह्मणः कृते ।
सुब्रह्मण्य इति ख्यातिं गमिष्यसि ततोऽधुना ॥　　५४

नैगमीं कुरु मर्यादामवतीर्य महीतले ।
निर्जित्य सौगतान्सर्वानाम्नायार्थविरोधिनः ॥　　५५

ब्रह्माऽपि ते सहायार्थं मण्डनो नाम भूसुरः ।
भविष्यति महेन्द्रोऽपि सुधन्वा नाम भूमिपः ॥　　५६

तथेति प्रतिजग्राह विधेरपि विधायिनीम् ।
बुधानीकपतिर्वाणीं सुधाधारामिव प्रभोः ॥　　५७

अथेन्द्रो नृपतिर्भूत्वा प्रजा धर्मेण पालयन् ।
दिवं चकार पृथिवीं स्वपुरीममरावतीम् ॥　　५८

सर्वज्ञोऽप्यसतां शास्त्रे कृत्रिमश्रद्धयाऽन्वितः ।
प्रतीक्षमाणः क्रौञ्चारिं मेलयामास सौगतान् ॥　　५९

ततः स तारकारातिरजनिष्ट महीतले ।
भट्टपादाभिधा यस्य भूषा दिवसुदृशामभूत् ॥　　६०

स्फुटयन्वेदतात्पर्यमभाज्जैमिनिसूत्रितम् ।
सहस्रांशुरिवानूरुव्यञ्जितं भासयञ्जगत् ॥　　६१

राज्ञः सुधन्वनः प्राप नगरीं स जयन्दिशः ।
प्रत्युद्गम्य क्षितीन्द्रोऽपि विधिवत्तमपूजयत् ॥　　६२

सोऽभिनन्द्याशिषा भूपमासीनः काञ्चनासने ।
तां सभां शोभयामास सुरभिर्ध्वनीमिव ॥　　६३

सभासमीपविटपिश्रितकोकिलकूजितम् ।
श्रुत्वा जगाद तद्व्याजाद्राजानं पण्डिताग्रणीः ॥ ६४

मलिनैश्चेन्न सङ्गस्ते नीचैः काककुलैः पिक ।
श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥ ६५

षडभिज्ञा निशम्येमां वाचं तात्पर्यगर्भिताम् ।
नितरां चरणस्पृष्टा भुजङ्गा इव चुक्रुधुः ॥ ६६

छित्त्वा युक्तिकुठारेण बुद्धसिद्धान्तशाखिनम् ।
स तद्ग्रन्थेन्धनैश्चीर्णैः क्रोधज्वालामवर्धयत् ॥ ६७

सा सभा वदनैस्तेषां रोषपाटलकान्तिभिः ।
बभौ बालातपाताम्रैः सरसीव सरोरुहैः ॥ ६८

उपन्यस्यत्सु साक्षेपं खण्डयत्सु परस्परम् ।
तेषूदतिष्ठन्निर्घोषो भिन्दन्निव रसातलम् ॥ ६९

अधः पेतुर्बुधेन्द्रेण क्षताः पक्षेषु तत्क्षणम् ।
व्यूढकर्कशतर्केण तथागतधराधराः ॥ ७०

स सर्वज्ञपदं विज्ञोऽसहमान इव द्विषाम् ।
चकार चित्रविन्यस्तानेतान्मौनविभूषितान् ॥ ७१

ततः प्रक्षीणदर्पेषु बौद्धेषु वसुधाधिपम् ।
बोधयन्बहुधा वेदवचांसि प्रशशंस सः ॥ ७२

बभाषेऽथ धराधीशो विद्यायत्तौ जयाजयौ ।
यः पतित्वा गिरेः शृङ्गादव्यग्रस्तन्मतं ध्रुवम् ॥ ७३

तदाकर्ण्य मुखान्यन्ये परस्परमलोकयन् ।
द्विजाग्र्यस्तु स्मरन्वेदानारुरोह गिरेः शिरः ॥ ७४

यदि वेदाः प्रमाणं स्युर्भूयात्काचिन्न मे क्षतिः ।
इति घोषयता तस्मान्न्यपाति सुमहात्मना ॥ ७५

किमु दौहित्रदत्तेऽपि पुण्ये विलयमास्थिते ।
ययातिश्च्यवते स्वर्गात्पुनरित्यूचिरे जनाः ॥ ७६

अपि लोकगुरुः शैलात्तूलपिण्ड इवापतत् ।
श्रुतिरात्मशरण्यानां व्यसनं नोच्छिनत्ति किम् ॥ ७७

श्रुत्वा तदद्भुतं कर्म द्विजा दिग्भ्यः समाययुः ।
घनघोषमिवाकर्ण्य निकुञ्जेभ्यः शिखावलाः ॥ ७८

दृष्ट्वा तमक्षतं राजा श्रद्धां श्रुतिषु सन्दधे ।
निनिन्द बहुधाऽऽत्मानं खलसंसर्गदूषितम् ॥ ७९

सौगतास्त्वब्रुवन्नेदं प्रमाणं मतिनिर्णये ।
मणिमन्त्रौषधैरेवं देहरक्षा भवेदिति ॥ ८०

दुर्विधैरन्यथा नीते प्रत्यक्षेऽर्थेऽपि पार्थिवः ।
भ्रुकुटीभीकरमुखः सन्धामुग्रतरां व्यधात् ॥ ८१

पृच्छामि भवतः किञ्चिद्वक्तुं न प्रभवन्ति ये ।
यन्त्रोपलेषु सर्वांस्तान्घातयिष्याम्यसंशयम् ॥ ८२

इति संश्रुत्य गोत्रेशो घटमाशीविषान्वितम् ।
आनीयात्र किमस्तीति पप्रच्छ द्विजसौगतान् ॥ ८३

वक्ष्यामहे वयं भूप श्वः प्रभातेऽस्य निर्णयम् ।
इति प्रसाद्य राजानं जग्मुर्भूसुरसौगताः ॥ ८४

पद्मा इव तपस्तेषुः कण्ठद्वयसपाथसि ।
द्युमणिं प्रति भूदेवाः सोऽपि प्रादुरभूत्ततः ॥ ८५

सन्दिश्य वचनीयांशमादित्येऽन्तर्हिते द्विजाः ।
आजग्मुरपि निश्चित्य सौगताः कलशस्थितम् ॥ ८६

ततस्ते सौगताः सर्वे भुजंगोऽस्तीत्यवादिषुः ।
भोगीशभोगशयनो भगवानिति भूसुराः ॥ ८७

श्रुतभूसुरवाक्यस्य वदनं पृथिवीपतेः ।
कासारशोषणम्लानसारसश्रियमाददे ॥ ८८

अथ प्रोवाच दिव्या वाक् सम्राजमशरीरिणी ।
तुदन्ती संशयं तस्य सर्वेषामेव शृण्वताम् ॥ ८९

सत्यमेव महाराज ब्राह्मणा यद्बभाषिरे ।
मा कृथाः संशयं तत्र भव सत्यप्रतिश्रवः ॥ ९०

श्रुत्वाऽशरीरिणीं वाणीं ददर्श वसुधाधिपः ।
मूर्तिं मधुद्विषः कुम्भे सुधामिव सुराधिपः ॥ ९१

निरस्ताखिलसन्देहो विन्यस्तेतरदर्शनात् ।
व्यधादाज्ञां ततो राजा वधाय श्रुतिविद्विषाम् ॥ ९२

आसेतोरातुषाराद्रेर्बौद्धानावृद्धबालकम् ।
न हन्ति यः स हन्तव्यो भृत्यानित्यन्वशान्नृपः ॥ ९३

इष्टोऽपि दृष्टदोषश्चेद्वध्य एव महात्मनाम् ।
जननीमपि किं साक्षान्नावधीद्भृगुनन्दनः ॥ ९४

स्कन्दानुसारिराजेन जैना धर्मद्विषो हताः ।
योगीन्द्रेणेव किं योगघ्ना विघ्नास्तत्त्वावलम्बिना ॥ ९५

हतेषु तेषु दुष्टेषु परितस्तार कोविदः ।
श्रौतवर्त्म तमिस्रेषु नष्टेष्विव रविर्महः ॥ ९६

कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु ।
निष्प्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः ॥ ९७

प्रागित्थं ज्वलनभुवा प्रवर्तितेऽस्मिन् कर्माध्वन्यखिलविदा कुमारिलेन ।
उद्धर्तुं भुवनमिदं भवाब्धिमग्नं कारुण्याम्बुनिधिरियेष चन्द्रचूडः ॥ ९८

इति श्रीमाधवीये तदुपोद्घातकथापरः ।
संक्षेपशङ्करजये सर्गोऽयं प्रथमोऽभवत् ॥

आदितः श्लोकाः 98

# द्वितीयः सर्गः ॥ १ ॥

## आचार्यजन्मादिकथनम् ॥

ततो महेशः किल केरलेषु श्रीमद्वृषाद्रौ करुणासमुद्रः ।
पूर्णानदीपुण्यतटे स्वयंभूलिङ्गात्मनाऽनङ्गधगाविरासीत् ॥ १

तच्चोदितः कश्चन राजशेखरः स्वप्ने मुहुर्दृष्टतदीयवैभवः ।
प्रासादमेकं परिकल्प्य सुप्रभं प्रावर्तयत्तस्य समर्हणं विभोः ॥ २

तस्येश्वरस्य प्रणतार्तिहर्तुः प्रसादतः प्राप्तनिरीतिभावः ।
कश्चित्तदभ्याशगतोऽग्रहारः कालट्यभिख्योऽस्ति महान्मनोज्ञः ॥ ३

कश्चिद्द्विपश्चिदिह निश्चलधीर्विरेजे विद्याधिराज इति विश्रुतनामधेयः ।
रुद्रो वृषाद्रिनिलयोऽवतरीतुकामो यत्पुत्रमात्मपितरं समरोचयत्सः ॥ ४

पुत्रोऽभवत्तस्य पुरात्तपुण्यैः सुब्रह्मतेजाः शिवगुर्वभिख्यः ।
ज्ञाने शिवो यो वचने गुरुस्तस्यान्वर्थनामाऽकृत लब्धवर्णः ॥ ५

स ब्रह्मचारी गुरुगेहवासी तत्कर्यकारी विहितान्नभोजी ।
सायंप्रभातं च हुताशसेवी व्रतेन वेदं निजमध्यगीष्ट ॥ ६

क्रियाद्यनुष्ठानफलोऽर्थबोधः स नोपजायेत विना विचारम् ।
अधीत्य वेदानथ तद्विचारं चकार दुर्बोधतरो हि वेदः ॥ ७

वेदेष्वधीतेषु विचारितेऽर्थे शिष्यानुरागी गुरुराह तं स्म ।
अपाठि मत्तः सषडङ्गवेदो व्यचारि कालो बहुरत्यगात्ते ॥ ८

भक्तोऽपि गेहं व्रज संप्रति त्वं जनोऽपि ते दर्शनलालसः स्यात् ।
गत्वा कदाचित्स्वजनप्रमोदं विधेहि मा तात विलम्बयस्व ॥ ९

विधातुमिष्टं यदिहापराह्णे विजानता तत्पुरुषेण पूर्वम् ।
विधेयमेवं यदिह श्व इष्टं कर्तुं तदद्येति विनिश्चितोऽर्थः ॥ १०

कालोप्तबीजादिह यादृशं स्यात्सस्यं न तादृग्विपरीतकालात् ।
तथा विवाहादि कृतं स्वकाले फलाय कल्पेत न चेद्वृथा स्यात् ॥

आ जन्मनो गणयतो ननु तान्गताब्दान्माता पिता परिणयं तव कर्तुकामौ।
पित्रोरियं प्रकृतिरेव पुरोपनीतिं यद्ध्यायतस्तनुभवस्य ततो विवाहम् ॥

तत्तत्कुलीनपितरः स्पृहयन्ति कामं तत्तत्कुलीनपुरुषस्य विवाहकर्म ।
पिण्डप्रदात्पुरुषस्य ससन्ततित्वे पिण्डाविलोपमुपरि स्फुटमीक्षमाणाः ॥

अर्थावबोधनफलो हि विचार एष तच्चापि चित्रबहुकर्मविधानहेतोः ।
अत्राधिकारमधिगच्छति सद्वितीयः कृत्वा विवाहमिति वेदविदां प्रवादः ॥

सत्यं गुरो न नियमोऽस्ति गुरोरधीतवेदो गृही भवति नान्यपदं प्रयाति ।
वैराग्यवान्व्रजति भिक्षुपदं विवेकी नो चेद्गृही भवति राजपदं तदेतत् ॥

श्रीनैष्ठिकाश्रममहं परिगृह्य यावज्जीवं वसामि तव पार्श्वगतश्चिरायुः ।
दण्डाजिनी सविनयो बुध जुह्वदग्नौ वेदं पठन्पठितविस्मृतिहानिमिच्छन् ॥

दारग्रहो भवति तावदयं सुखाय यावत्कृतोऽनुभवगोचरतां गतः स्यात् ।
पश्चाच्छनैर्विरसतामुपयाति सोऽयं किं निह्नुषे त्वमनुभूतिपदं महात्मन् ॥

यागोऽपि नाकफलदो विधिना कृतश्चेत्
प्रायः समग्रकरणं भुवि दुर्लभं तत् ।
दृष्ट्यादिवन्न हि फलं यदि कर्मणि स्यात्
दिष्ट्या यथोक्तविरहे फलदुर्विधत्वम् ॥ १८

निःस्वो भवेद्यदि गृही निरयी स नूनं
भोक्तुं न दातुमपि यः क्षमतेऽणुमात्रम् ।
पूर्णेऽपि पूर्तिमभिमन्तुमशक्नुवन्यो
मोहेन शं न मनुते खलु तत्र तत्र ॥ १९

यावत्सु सत्सु परिपूर्तिरथो अमीषां साधो गृहोपकरणेषु सदा विचारः ।
एकत्र संहतवतः स्थितपूर्वनाशस्तच्चापयाति पुनरप्यपरेण योगः ॥ २०

एवं गुरौ वदति तज्जनको निनीषुरागच्छदत्र तनयं स्वगृहं गृहेशः ।
तेनानुनीय बहुलं गुरवे प्रदाप्य यत्नान्निकेतनमनायि गृहीतविद्यः ॥ २१

गत्वा निकेतनमसौ जननीं ववन्दे साऽऽलिङ्ग्य तद्विरहजं परितापमौज्झत् ।
प्रायेण चन्दनरसादपि शीतलं तद्यत्पुत्रगात्रपरिरम्भणनामधेयम् ॥ २२

श्रुत्वा गुरोः सदनतश्चिरमागतं तं तद्बन्धुराग मदथ त्वरितेक्षणाय ।
प्रत्युद्गमादिभिरसावपि बन्धुतायाः संभावनां व्यधित वित्तकुलानुरूपाम् ॥

वेदे पदक्रमजटादिषु तस्य बुद्धिं संवीक्ष्य तज्जनयिता बहुशोऽप्यपृच्छत् ।
यस्याभवत्प्रथितनाम वसुन्धरायां विद्याधिराज इति सङ्गतवाच्यमस्य ॥

भाट्टे नये गुरुमते कणभुक्मतादौ
　　प्रश्नं चकार तनयस्य मतिं बुभुत्सुः ।
शिष्योऽप्युवाच नतपूर्वगुरुः समाधिं
　　पित्रोदितः स्मितमुखो हसिताम्बुजास्यः ॥　　२५

वेदे च शास्त्रे च निरीक्ष्य बुद्धिं प्रश्नोत्तरादावपि नैपुणीं ताम् ।
दृष्ट्वा तुतोषातितरां पिताऽस्य स्वतः सुखा या किमु शास्त्रतो वाक् ॥

कन्यां प्रदातुमनसो बहवोऽपि विप्रास्तन्मन्दिरं प्रति ययुर्गुणपाशकृष्टाः ।
पूर्वं विवाहसमयादपि तस्य गेहं संबन्धवत्किल बभूव वरीतुकामैः ॥ २७

बह्वर्थदायिषु बहुष्वपि सत्सु देशे कन्याप्रदातृषु परीक्ष्य विशिष्टजन्म ।
कन्यामयाचत सुताय स विप्रवर्यो विप्रं विशिष्टकुलजं प्रथितानुभावः ॥

कन्यापितुर्वरपितुश्च विवाद आसीदित्थं तयोः कुलजुषोः प्रथितोरुभूत्योः ।
कार्यस्त्वया परिणयो गृहमेत्य पुत्रीमानीय सद्म तनयाय सुता प्रदेया ॥

सङ्कल्पिताद् द्विगुणमर्थमहं प्रदास्ये मद्गेहमेत्य परिणीतिरियं कृता चेत् ।
अर्थं विना परिणयं द्विज कारयिष्ये पुत्रेण मे गृहगता यदि कन्यका स्यात् ॥

कश्चित्तु तस्याः पितरं बभाण मिथः समाहूय विशेषवादी ।
अस्मासु गेहं गतवत्स्वमुष्मै विगृह्य कन्यामपरः प्रदद्यात् ॥　　३१

तेनानुनीतो वरतातभाषितं द्विजोऽनुमेने वररूपमोहितः ।
दृष्टो गुणः संवरणाय कल्पते मन्त्रोऽभिजापाच्चिरकालभावितः ॥　३२

विद्याधिराजमघपण्डितनामधेयौ संप्रत्ययं व्यतनुतामभिपूज्य दैवम् ।
सम्यङ्मुहूर्तमवलम्ब्य विचारणीया मौहूर्तिका इति परस्परमूचिवांसौ ॥

उद्वाह्य शास्त्रविधिना विहिते मुहूर्ते तौ संमुदं बहुमवापतुराप्तकामौ ।
तत्रागतो भृशममोदत बन्धुवर्गः किं भाषितेन बहुना मुदमाप वर्गः ॥

तौ दंपती सुवसनौ शुभदन्तपङ्क्ती संभूषितौ विकसिताम्बुजरम्यवक्त्रौ ।
सव्रीडहासमुखवीक्षणसंप्रहृष्टौ देवाविवापतुरनुत्तमशर्म नित्यम् ॥ ३५

अग्नीनथाधित महोत्तरयागजातं कर्तुं विशेषकुशलैः सहितो द्विजेशः ।
तत्तत्फलं हि यदनाहितहव्यवाहः स्यादुत्तरेषु विहितेष्वपि नाधिकारी ॥

यागैरनेकैर्बहुवित्तासध्यैर्विजेतुकामो भुवनान्ययष्ट ।
व्यस्मारि देवैरमृतं तदाशैर्दिने दिने सेवितयज्ञभागैः ॥ ३७

संतर्पयन्तं पितृदेवमानुषांस्तत्तत्पदार्थैरभिवाञ्छितैः सह ।
विशिष्टवित्तैः सुमनोभिरञ्चितं तं मेनिरे जङ्गमकल्पपादपम् ॥ ३८

परोपकारव्रतिनो दिने दिने व्रतेन वेदं पठतो महात्मनः ।
श्रुतिस्मृतिप्रोदितकर्म कुर्वतः समा व्यतीयुर्दिनमाससंमिताः ॥ ३९

रूपेषु मारः क्षमया वसुन्धरा विद्यासु वृद्धो धनिनां पुरःसरः ।
गर्वानभिज्ञो विनयी सदा नतः स नोपलेभे तनयाननं जरन् ॥ ४०

गावो हिरण्यं बहुसस्यमालिनी वसुन्धरा चित्रपदं निकेतनम् ।
संभावना बन्धुजनैश्च संगमो न पुत्रहीनं बहवोऽप्यमूमुदन् ॥ ४१

अस्यामजाता मम सन्ततिश्चेच्छ्वरय्यवश्यं भवितोपरिष्टात् ।
तत्राप्यजाता तत उत्तरस्यामेवं स कालं मनसा निनाय ॥ ४२

खिन्दन्मनाः शिवगुरुः कृतकार्यशेषो जायामचष्ट सुभगे किमतः परं नौ ।
साङ्गं वयोऽर्धमगमत्कुलजे न दृष्टं पुत्राननं यदिहलोकयमुदाहरन्ति ॥ ४३

एवं प्रिये गतवतोः सुतदर्शनं चेत्पञ्चत्वमैष्यदथ नौ शुभमापतिष्यत् ।
अस्याभ्युपायमनिशं भुवि वीक्षमाणो नेक्षे ततः पितृजनिर्विफला ममाभूत् ॥

भद्रे सुतेन रहितौ भुवि के वदन्ति नौ पुत्रपौत्रसरणिक्रमतः प्रसिद्धिः ।
लोके न पुष्पफलशून्यमुदाहरन्ति वृक्षं प्रवालसमये फलितं विहाय ॥

इतीरिते प्राह तदीयभार्या शिवाख्यकल्पद्रुममाश्रयावः ।
तत्सेवनान्नौ भविता सुनाथ फलं स्थिरं जङ्गमरूपमैशम् ॥ ४६

भक्तेप्सितार्थपरिकल्पनकल्पवृक्षं देवं भजाव कमितः सकलार्थसिद्ध्यै ।
तत्रोपमन्युमहिमा परमं प्रमाणं नो देवतासु जडिमा जडिमा मनुष्ये ॥ ४७

इत्थं कलत्रोक्तिमनुत्तमां च श्रुत्वा सुतार्थी प्रणतैकवश्यम् ।
इयेष सन्तोषयितुं तपोभिः सोमार्धमूर्धानमुमार्धमीशम् ॥ ४८

तस्योपधाम किल संनिहिताऽऽपगैका
स्नात्वा सदाशिवमुपास्त जले स तस्याः ।
कन्दाशनः कतिचिदेव दिनानि पूर्वं
पश्चात्तदा स शिवपादयुगाब्जभृङ्गः ॥ ४९

जायाऽपि तस्य विमला नियमोपतापैश्चिक्लेश कायमनिशं शिवमर्चयन्ती ।
क्षेत्रे वृषस्य निवसन्तमजं स भर्तुः कालोऽत्यगादिति तयोस्तपतोरनेकः ॥

देवः कृपापरवशो द्विजवेषधारी प्रत्यक्षतां शिवगुरुं गत आत्तनिद्रम् ।
प्रोवाच भोः किमभिवाञ्छसि किं तपस्ते पुत्रार्थितेति वचनं स जगाद विप्रः ॥

देवोऽप्यपृच्छदथ तं द्विज विद्धि सत्यं सर्वज्ञमेकमपि सर्वगुणोपपन्नम् ।
पुत्रं ददान्यथ बहून्विपरीतकांस्ते भूर्यायुषस्तनुगुणानवदद् द्विजेशः ॥

पुत्रोऽस्तु मे बहुगुणः प्रथितानुभावः सर्वज्ञतापदमितीरित आबभाषे ।
दद्यामुदीरितपदं तनयं तपो मा पूर्णो भविष्यसि गृहं द्विज गच्छ दारैः ॥

आकर्णयन्निति बुबोध स विप्रवर्यस्तं चाब्रवीन्निजकलत्रमनिन्दितात्मा ।
स्वप्नं शशंस वनितामणिरस्य भार्या सत्यं भविष्यति तु नौ तनयो महात्मा ॥

तौ दम्पती शिवपरौ नियतौ स्मरन्तौ स्वप्नेक्षितं गृहगतौ बहुदक्षिणान्नैः ।
संतर्प्य विप्रनिकरं तदुदीरिताभिराशीर्भिरापतुरनल्पमुदं विशुद्धौ ॥ ५५

तस्मिन्दिने शिवगुरोरुपभोक्ष्यमाणे भक्ते प्रविष्टमभवत्किल शैवतेजः ।
भुक्तान्नविप्रवचनादुपभुक्तशेषं सोऽभुङ्क्त साऽपि निजभर्तृपदाब्जभृङ्गी ॥

गर्भं दधार शिवगर्भमसौ मृगाक्षी गर्भोऽप्यवर्धत शनैरभवच्छरीरम् ।
तेजोऽतिरेकविनिवारितदृष्टिपातविश्वं रवेर्दिवसमध्य इवोग्रतेजः ॥ ५७

गर्भालसा भगवती गतिमान्द्यमीषदापेति नाद्भुतमिदं धरते शिवं या ।
यो विष्टपानि बिभृते हि चतुर्दशापि यस्यापि मूर्तय इमा वसुधाजलाद्याः ॥

संव्याप्तवानपि शरीरमशेषमेव नोपास्तिमाविरसकावकृतात्र कांचित् ।
यत्पूर्वमेव महसा दुरतिक्रमेण व्याप्तं शरीरमदसीयमनुष्य हेतोः ॥ ५९

रम्याणि गन्धकुसुमान्यपि गर्भिमस्यै नाधातुमैशत भरात्किमु भूषणानि ।
यद्यद्गुरुत्वपदमस्ति पदार्थजातं तत्तद्विधारणविधावलसा बभूव ॥ ६०

तां दौहृदं भृशमबाधत दुःशरारिः प्रायः परं किल न मुञ्चति मुञ्चतेऽपि ।
आनीतदुर्लभमपोहति याचतेऽन्यत्तच्चाप्यपोह्य पुनरर्दति साऽन्यवस्तु ॥

तां बन्धुताऽऽगमदुपश्रुतदोहदार्तिरादाय दुर्लभमनर्घ्यमपूर्ववस्तु ।
आस्वाद्य बन्धुजनदत्तमसौ जहर्ष हा हन्त गर्भधरणं खलु दुःखहेतुः ॥

मानुष्यधर्ममनुसृत्य मयेदमुक्तं काऽपि व्यथा शिवमहोभरणे न वध्वाः ।
सर्वव्यथाव्यतिकरं परिहर्तुकामा देवं भजन्त इति तत्त्वविदां प्रवादः ॥

उक्ष्णा निसर्गधवलेन महीयसा सा स्वात्मानमैक्षत समूढमुपात्तनिद्रा ।
संगीयमानमपि गीतविशारदाढ्यैर्विद्याधरप्रभृतिभिर्विनयोपयातैः ॥ ६४

आकर्णयज्जय जयेति वरं दधाना
रक्षेति शब्दमवलोकय मा दृशेति ।
आकर्ण्य नोत्थितवती पुनरुक्तशब्दं
सा विस्मिता किल शृणोति निरीक्षमाणा ॥ ६५

नर्मोक्तिकृत्यामपि खिद्यमाना किञ्चापि चञ्चत्तरमञ्चरोहे ।
जित्वा मुदाऽन्यानतिहृद्यविद्यासिंहासनेऽसौ स्थितिमीक्षते स्म ॥ ६६

समानता सात्त्विकवृत्तिभाजां विरागता वैषयिकप्रवृत्तौ ।
तस्याः स्त्रिया गर्भगपुत्रचित्रचरित्रशंसिन्यजनिष्ट चेष्टा ॥　　६७

तद्रोमवल्ली रुरुचे कुचाग्र्याद्व्रणवत्प्रभाधुन्युरुशैवलालिः ।
यत्नाच्छिशोरस्य कृते प्रशस्तो न्यस्तो विधात्रेव नवीनवेणुः ॥　　६८

पयोधरद्वंद्वमिषादमुष्याः पयःपिबत्यर्थविधानयोग्यौ ।
कुम्भौ नवीनामृतपूरितौ द्वावम्भोजयोनिः कलयांबभूव ॥　　६९

द्वैतप्रवादं कुचकुम्भमध्ये मध्ये पुनर्माध्यमिकं मतं च ।
सुभ्रूमणेर्गर्भग एव सोऽर्भो द्रागगर्हयामास महात्मगर्ह्यम् ॥　　७०

लग्ने शुभे शुभयुते सुषुवे कुमारं श्रीपार्वतीव सुखिनी शुभवीक्षिते च ।
जाया सती शिवगुरोर्निजतुङ्गसंस्थे सूर्ये कुजे रविसुते च गुरौ च केन्द्रे ॥

दृष्ट्वा सुतं शिवगुरुः शिववारिराशौ
मग्नोऽपि शक्तिमनुसृत्य जले न्यमांक्षीत् ।
व्यश्राणयद्बहु धनं वसुधाश्च गाश्च
जन्मोक्तकर्मविषये द्विजपुंगवेभ्यः ॥　　७२

तस्मिन्दिने मृगकरीन्द्रतरक्षुसिंहसर्पाखुमुख्यबहुजन्तुगणा द्विषन्तः ।
वैरं विहाय सह चेरुरतीव हृष्टाः कण्डूमपाकृषत साधुतया निघृष्टाः ॥

वृक्षा लताः कुसुमराशिफलान्यमुञ्चन्नद्यः प्रसन्नसलिला निखिलास्तथैव ।
जाता मुहुर्जलधरोऽपि निजं विकारं भूभृद्गणादपि जलं सहसोत्पपात ॥

अद्वैतवादिविपरीतमतावलम्बिहस्ताग्रवर्तिवरपुस्तकमप्यकस्मात् ।
उच्चैः पपात जहसुः श्रुतिमस्तकानि श्रीव्यासचित्तकमलं विकचीबभूव ॥

सर्वाभिराशाभिरलं प्रसेदे वातैरभाव्यद्भुतदिव्यगन्धैः ।
प्रजज्वलेऽपि ज्वलनैस्तदानीं प्रदक्षिणीभूतविचित्रकीलैः ॥　　७६

सुमनोहरगन्धिनी सतां सुमनोवद्विमला शिवंकरी ।
सुमनोनिकरप्रचोदिता सुमनोवृष्टिरभूत्तदाऽद्भुतम् ॥　　७७

लोकत्रयी लोकदृशेव भास्वता महीधरेणेव मही सुमेरुणा ।
विद्या विनीत्येव सती सुतेन सा रराज तत्तादृशराजतेजसा ॥ ७८

सत्कारपूर्वमभियुक्तमुहूर्तवेदिविप्राः शशंसुरभिवीक्ष्य सुतस्य जन्म ।
सर्वज्ञ एव भविता रचयिष्यते च शास्त्रं स्वतन्त्रमथ वागधिपांश्च जेता ॥

कीर्तिं स्वकां भुवि विधास्यति यावदेषा
किं बोधितेन बहुना शिशुरेष पूर्णः ।
नापृच्छि जीवितमनेन च तैर्न चोक्तं
प्रायो विदन्नपि न वक्त्यशुभं शुभज्ञः ॥ ८०

तज्ज्ञातिबन्धुसुहृदिष्टजनाङ्गनास्तास्तं सूतिकागृहनिविष्टमथो निदध्युः ।
सोपायनास्तमभिवीक्ष्य यथा निदाघे चन्द्रं मुदं ययुरतीव सरोजवक्त्रम् ॥

तत्सूतिकागृहमवैक्षत न प्रदीपं तत्तेजसा यदवभातमभूत्क्षपायाम् ।
आश्चर्यमेतदजनिष्ट समस्तजन्तोस्तन्मन्दिरं वितिमिरं यदभूददीपम् ॥

यत्पश्यतां शिशुरसौ कुरुते शमग्र्यं तेनाकृतास्य जनकः किल शङ्कराख्याम् ।
यद्वा चिराय किल शङ्करसंप्रसादाज्जातस्ततो व्यधित शङ्करनामधेयम् ॥

सर्वं विदन्सकलशक्तियुतोऽपि बालो मानुष्यजातिमनुसृत्य चचार तद्वत् ।
बालः शनैर्हसितुमारभत क्रमेण स्रप्तुं शशाक गमनाय पदाम्बुजाभ्याम् ॥

बालेऽथ मञ्चे किल शायितेऽस्मिन्सतां प्रसन्नं हृदयं बभूव ।
संवीक्षमाणे मणिगुच्छवर्यं विद्वन्मुखं हन्त विलीनमासीत् ॥ ८५

संताडयन्हन्त शनैः पदाभ्यां पर्यङ्कवर्यं कमनीयशय्यम् ।
बिभेद सद्यः शतधा समूहान्विभेदवादीन्द्रमनोरथानाम् ॥ ८६

द्वित्राणि वर्णानि वदत्यमुष्मिन्द्वैतिप्रवीरा दधुरेव मौनम् ।
मुदा चलत्यङ्घ्रिसरोरुहाभ्यां दिशः पलायन्त दशापि सद्यः ॥ ८७

उदचारयदर्भको गिरः पदचारानतनोदनन्तरम् ।
विकलोऽभवदादिमात्तयोः पिकलोकश्चरमान्मरालकः ॥ ८८

नवविद्रुमपल्लवास्तृतामिव काश्मीरपरागपाटलाम् ।
रचयन्नचलां पदत्विषा स चचारेन्दुनिभः शनैः शनैः ॥ ८९

मूर्धनि हिमकरचिह्नं निटिले नयनाङ्कमंसयोः शूलम् ।
वपुषि स्फटिकसवर्णं प्राज्ञास्तं मेनिरे शंभुम् ॥ ९०

राज्यश्रीरिव नयकोविदस्य राज्ञो विद्येव व्यसनदवीयसो बुधस्य ।
शुभ्रांशोश्छविरिव शारदस्य पित्रोः संतोषैः सह ववृधे तदीयमूर्तिः ॥

नागेनोरसि चामरेण चरणे बालेन्दुना फालके
पाण्योश्चक्रगदाधनुर्डमरुकैर्मूर्ध्नि त्रिशूलेन च ।
तत्तस्याद्भुतमाकलय्य ललितं लेखाकृते लाञ्छितं
चित्रं गात्रममंस्त तत्र जनता नेत्रैर्निमेषोज्झितैः ॥ ९२

सर्गे प्राथमिके प्रयाति विरतिं मार्गे स्थिते दौर्गते
स्वर्गे दुर्गमतामुपेयुषि भृशं दुर्गेऽपवर्गे सति ।
वर्गे देहभृतां निसर्गमलिने जातोपसर्गेऽखिले
सर्गे विश्वसृजस्तदीयवपुषा भर्गोऽवतीर्णो भुवि ॥ ९३

इति श्रीमाधवीये तदवतारकथापरः ।
संक्षेपशङ्करजये सर्गः पूर्णो द्वितीयकः ॥

आदितः श्लोकाः 191

## तृतीयः सर्गः ॥ ३ ॥

### देवावतारः ॥

इति बालमृगाङ्कशेखरे सति बालत्वमुपागते ततः ।
दिविषत्प्रवराः प्रजज्ञिरे भुवि षट्शास्त्रविदां सतां कुले ॥ १

कमलानिलयः कलानिधेर्विमलाख्यादजनिष्ट भूसुरात् ।
भुवि पद्मपदं वदन्ति यं सविपद्येन विवादिनां यशः ॥ २

पवमानोऽप्यजनि प्रभाकरात्सवनोन्मीलितकीर्तिमण्डलात् ।
गलहस्तितभेदवाद्यसौ किल हस्तामलकाभिधामधात् ॥ ३

पवमानदशांशतोऽजनि प्लवमानाऽश्वति यद्यशोम्बुधौ ।
धरणी मथिता विवादिवाक्करणी येन स तोटकाह्वयः ॥ ४

उदभावि शिलादसूनुना मदवद्वादिकदम्बनिग्रहैः ।
समुदञ्चितकीर्तिशालिनं यमुदङ्कं ब्रुवते महीतले ॥ ५

विधिरास सुरेश्वरो गिरां निधिरानन्दगिरिर्व्यजायत ।
अरुणः समभूत्सनन्दनो वरुणोऽजायत चित्सुखाह्वयः ॥ ६

अपरेऽप्यभवन्दिवौकसः स्वपरेर्ष्यापरविद्विषः प्रभोः ।
चरणं परिसेवितुं जगच्छरणं भूसुरपुङ्गवात्मजाः ॥ ७

चार्वाकदर्शनविधानसरोषधातृ-
शापेन गीष्पतिरभूद्भुवि मण्डनाख्यः ।
नन्दीश्वरः करुणयेश्वरचोदितः स-
न्नानन्दगिर्यभिधया व्यजनीति केचित् ॥ ८

अथावतीर्णस्य विधेः पुरन्ध्री साऽभूद्यदाख्योभयभारतीति ।
सरस्वती सा खलु वस्तुवृत्या लोकोऽपि तां वक्ति सरस्वतीति ॥ ९

पुरा किलाध्यैषत धातुरन्तिके सर्वज्ञकल्पा मुनयो निजं निजम् ।
वेदं तदा दुर्वसनोऽतिकोपनो वेदानधीयन्क्वचिदस्खलत्स्वरे ॥ १०

तदा जहासेन्दुमुखी सरस्वती यदङ्गमर्णोद्भवशब्दसन्ततिः ।
चुकोप तस्यै दहनानुकारिणा निरैक्षताक्ष्णा मुनिरुग्रशासनः ॥ ११

शशाप तां दुर्विनयेऽवनीतले जायस्व मर्त्येष्वबिभेत्सरस्वती ।
प्रसादयामास निसर्गकोपनं तत्पादमूले पतिता विषादिनी ॥ १२

दृष्ट्वा विषण्णां मुनयः सरस्वतीं प्रसादयांचक्रुरिमं तमादरात् ।
कृतापराधा भगवन्क्षमस्व तां पितेव पुत्रं विहितागसं मुने ॥ १३

प्रसादितोऽभूदथ सम्प्रसन्नो वाण्या मुनीन्द्रैरपि शापमोक्षम् ।
ददौ यदा मानुषशङ्करस्य संदर्शनं स्याद्भवितास्यमर्त्या ॥ १४

सा शोणतीरेऽजनि विप्रकन्या सर्वार्थवित्सर्वगुणोपपन्ना ।
यस्या बभूवुः सहजाश्च विद्याः शिरोगतं के परिहर्तुमीशाः ॥ १५

सर्वाणि शास्त्राणि षडङ्गवेदान्काव्यादिकान्वेत्ति परं च सर्वम् ।
तन्नास्ति नो वेत्ति यदत्र बाला तस्मादभूच्चित्रपदं जनानाम् ॥ १६

सा विश्वरूपं गुणिनं गुणज्ञा मनोऽभिरामं द्विजपुङ्गवेभ्यः ।
शुश्राव तां चापि स विश्वरूपस्तस्मात्तयोर्दर्शनलालसाऽभूत् ॥ १७

अन्योन्यसंदर्शनलालसौ तौ चिन्ताप्रकर्षादधिगम्य निद्राम् ।
अवाप्य संदर्शनभाषणानि पुनः प्रबुद्धौ विरहाग्नितप्तौ ॥ १८

दिदृक्षमाणावपि नेक्षमाणावन्योन्यवार्ताहृतमानसौ तौ ।
यथोचिताहारविहारहीनौ तनौ तनुत्वं स्मरणादुपेतौ ॥ १९

दृष्ट्वा तदीयौ पितरौ कदाचिदपृच्छतां तौ परिकर्शिताङ्गौ ।
वपुः कृशं ते मनसोऽप्यगर्वौ न व्याधिमीक्षे न च हेतुमन्यम् ॥ २०

इष्टस्य हानेरनभीष्टयोगाद्भवन्ति दुःखानि शरीरभाजाम् ।
वीक्षे न तौ द्वावपि वीक्षमाणो विना निदानं नहि कार्यजन्म ॥ २१

न तेऽत्यगादुद्वहनस्य कालः परावमानो न च निःस्वता वा ।
कुटुम्बभारो मयि दुःसहोऽयं कुमारवृत्तेस्तव काऽत्र पीडा ॥ २२

न मूढभावः परितापहेतुः पराजितिर्वा तव तन्निदानम् ।
विद्वत्सु त्रिस्पष्टतयाऽग्रपाठात्सुदुर्गमार्थादपि तर्कविद्भिः ॥ २३

आ जन्मनो विहितकर्मनिषेवणं ते
स्वप्नेऽपि नास्ति विहितेतरकर्मसेवा ।
तस्मान्न भेयमपि नारकयातनाभ्यः
किं ते मुखं प्रतिदिनं गतशोभमास्ते ॥ २४

निर्बन्धतो बहुदिनं प्रतिपाद्यमानौ
वक्तुं कृपाभरयुताविदमूचतुः स्म ।
निर्बन्धतस्तव वदामि मनोगतं मे
वाच्यं न वाच्यमिति यद्वितनोति लज्जाम् ॥ २५

शोणाख्यपुंनदतटे वसतो द्विजस्य
कन्या श्रुतिं गतवती द्विजपुङ्गवेभ्यः ।
सर्वज्ञतापदमनुत्तमरूपवेषां
तामुद्विवक्षति मनो भगवन्मदीयम् ॥ २६

पुत्रेण सोऽतिविनयं गदितोऽन्वशाद् द्वौ
विप्रौ वधूवरणकर्मणि सम्प्रवीणौ ।
तावापतुर्द्विजगृहं द्विजसंदिदृक्षू
देशानतीत्य बहुलान्निजकार्यसिद्ध्यै ॥ २७

भूभृन्निकेतनगतः श्रुतविश्वशास्त्रः
श्रीविश्वरूप इति यः प्रथितः पृथिव्याम् ।
तत्पादपद्मरजसे स्पृहयामि नित्यं
साहाय्यमत्र यदि तात भवान्विदध्यात् ॥ २८

पुत्र्या वचः पिबति कर्णपुटेन ताते
श्रीविश्वरूपगुरुणा गुरुणा द्विजानाम् ।
आजग्मतुः सुवसनौ विशदाभयष्टी
संप्रेषितौ सुतवरोद्वहनक्रियायै ॥ २९

तावार्च्य स द्विजवरौ विहितोपचारैरायानकारणमथो शनकैरपृच्छत् ।
श्रीविश्वरूपगुरुवाक्यत आगतौ स्व इत्यूचतुर्वरणकर्मणि कन्यकायाः ॥

संप्रेषितौ श्रुतवयःकुलवृत्तधर्मैः साधारणीं श्रुतवता स्वसुतस्य तेन ।
याचावहे तव सुतां द्विज तस्य हेतोरन्योन्यसंघटनमेतु मणिद्वयं तत् ॥ ३१

मह्यं तदुक्तमभिरोचत एव विप्रौ पृष्ट्वा वधूं मम पुनः करवाणि नित्यम् ।
कन्याप्रदानमिदमायतते वधूषु नो चेदमूर्व्यसनसक्तिषु पीडयेयुः ॥ ३२

भार्यामपृच्छदथ किं करवाव भद्रे
विप्रौ वरीतुमनसौ खलु राजगेहात् ।
एतां सुतां सुतनिभा तव याऽस्ति कन्या
ब्रूहि त्वमेकमनुमाय पुनर्न वाच्यम् ॥ ३३

दूरे स्थितिः श्रुतवयःकुलवृत्तजातं न ज्ञायते तदपि किं प्रवदामि तुभ्यम् ।
वित्तान्विताय कुलवृत्तसमन्विताय देया सुतेति विदितं श्रुतिलोकयोश्च ॥

नैवं नियन्तुमनघे तव शक्यमेतत्तां रुक्मिणीं यदुकुलाय कुशस्थलीशे ।
प्रादात्स भीष्मकनृपः खलु कुण्डिनेशस्तीर्थापदेशमटते त्वपरीक्षिताय ॥

किं केन सङ्गतमिदं सति मा विचारीर्यो वैदिकीं सरणिमपहतां प्रयत्नात् ।
प्रातिष्ठिपत्सुगतदुर्जयनिर्जयेन शिष्यं यमेनमशिषत्स च भट्टपादः ॥ ३६

किं वर्ण्यते सुदति यो भविता वरो नो
विद्याधनं द्विजवरस्य न बाह्यवित्तम् ।
याऽन्वेति सन्ततमनन्तदिगन्तभाजं
यां राजचोरवनिता न च हर्तुमीशाः ॥ ३७

वध्वर्जनावनपरिव्ययगानि तानि
वित्तानि चित्तमनिशं परिखेदयन्ति ।
चोरान्नृपात्स्वजनतश्च भयं धनानां
शर्मेति जातु न गुणः खलु बालिशस्य ॥ ३८

केचिद्धनं निदधते भुवि नोपभोगं कुर्वन्ति लोभवशगा न विदन्ति केचित् ।
अन्येन गोपितमथान्यजना हरन्ति तच्चेन्नदीपरिसरे जलमेव हर्तृ ॥ ३९

सर्वात्मना दुहितरो न गृहे विधेयास्ताश्चेत्पुरा परिणयाद्रज उद्गतं स्यात् ।
पश्येयुरात्मपितरौ बत पातयन्ति दुःखेषु घोरनरकेष्विति धर्मशास्त्रम् ॥

मा भूदयं मम सुता कलहः कुमारीं
पृच्छाव सा वदति यं भविता वरोऽस्याः ।
एवं विधाय समयं पितरौ कुमार्याः
अभ्याशमीयतुरितो गदितेष्टकार्यौ ॥ ४१

श्रीविश्वरूपगुरुणा प्रहितौ द्विजाती
कन्यार्थिनौ सुतनु किं करवाव वाच्यम् ।
तस्याः प्रमोदनिचयो न ममौ शरीरे
रोमाञ्चपूरमिषतो बहिरुज्जगाम ॥ ४२

तेनैव सा प्रतिवचः प्रददौ पितृभ्यां तेनैव तावपि तयोर्युगलाय सत्यम् ।
आदाय विप्रमपरं पितृगेहतोऽस्यास्तौ जग्मतुर्द्विजवरौ स्वनिकेतनाय ॥

अस्माच्चतुर्दशदिने भविता दशम्यां
जामित्रभादिशुभयोगयुतो मुहूर्तः ।
एवं विलिख्य गणितादिषु कौशलास्या
व्याख्यापराय दिशति स्म सरस्वती सा ॥ ४४

तौ हृष्टपुष्टमनसौ विहितेष्टकार्यौ
श्रीविश्वरूपगुरुमुत्तममैक्षिषाताम् ।
सिद्धं समीहितमिति प्रथितानुभावो
दृष्ट्वैव तन्मुखमसावथ निश्चिकाय ॥ ४५

अन्यः स्वहस्तगतपत्रमदात्स पत्रं दृष्ट्वा जहास सुखवारिनिधौ ममज्ज ।
विप्रान्यथोचितमपूजयदागतांस्तान्नत्वांऽशुकादिभिरयं बहुवित्तलभ्यैः ॥

पित्रानुशिष्टवसुधासुरशंसितेन विज्ञापितः सुखमवाप स विश्वरूपः ।
कार्याण्यथाह पृथगात्मजनान्समेतान्बन्धुप्रियः परिणयोचितसाधनाय ॥

मौहूर्तिकैर्बहुभिरेत्य मुहूर्तकाले संदर्शिते द्विजवरैर्बहुविद्भिरिष्टैः ।
माङ्गल्यवस्तुसहितोऽखिलभूषणाढ्यः स प्रापदक्षततनुः पृथुशोणतीरम् ॥

शोणस्य तीरमुपयातमुपाशृणोत्स जामातरं बहुविधं किल विष्णुमित्रः ।
प्रत्युज्जगाम मुमुदे प्रियदर्शनेन प्रावीविशद् गृहममुं बहुवाद्यघोषैः ॥ ४९

दत्त्वाऽऽसनं मृदुवचः समुदीर्य तस्मै पाद्यं ददौ समधुपर्कमनर्घपात्रे ।
अर्घ्यं ददावहमियं तनया गृहास्ते गावो हिरण्यमखिलं भवदीयमूचे ॥

अस्माकमद्य पवितं कुलमादृताः स्मः संदर्शनं परिणयव्यपदेशतोऽभूत् ।
नोचेद्भवान्बहुविदग्रसरः क्वचाहं भद्रेण भद्रमुपयाति पुमान्विपाकात् ॥

यद्यद्गृहेऽत्र भगवन्निह रोचते ते तत्तन्निवेद्यमखिलं भवदीयमेतत् ।
वक्ष्यामि सर्वमभिलाषपदं त्वदीयं युक्तं हि सन्ततमुपासितवृद्धपूगे ॥ ५२

एवं मिथः परिनिगद्य विशेषमृद्ध्या वाचा युतौ मुदमवापतुरुत्तमां तौ ।
अन्ये च संमुमुदिरे प्रियसत्कथाभिः स्वेच्छाविहारहसनैरुभये विधेयाः ॥

कन्यावरौ प्रकृतिसिद्धसुरूपवेषौ दृष्ट्वोभयेऽपि परिकर्म विलम्बमानाः ।
चक्रुर्विधेयमिति कर्तुमनीश्वरास्ते शोभाविशेषमपि मङ्गलवासरेऽस्मिन् ॥

एतत्प्रभाप्रतिहतात्मविभूतिभावादाकल्पजातमपि नातिशयं वितेने ।
लोकप्रसिद्धिमनुसृत्य विधेयबुद्ध्या भूषां व्यधुस्तदुभये न विशेषबुद्ध्या ॥

मौहूर्तिका बहुविदोऽपि मुहूर्तकालमप्राक्षुरक्षतधियं खिलतीं सखीभिः ।
पश्चात्तदुक्तशुभयोगयुते शुभांशे मौहूर्तिकाः स्वमतितो जगृहुर्मुहूर्तम् ॥ ५६

जग्राह पाणिकमलं हिममित्रसूनुः श्रीविष्णुमित्रदुहितुः करपल्लवेन ।
भेरीमृदङ्गपटहाध्ययनाब्जघोषैर्दिङ्मण्डले सुपरिमूर्च्छति दिव्यकाले ॥

यं यं पदार्थमभिकामयते पुमान्यस्तं तं प्रदाय समतूतुषतां तदीड्यौ ।
देवद्रुमाविव महासुमनस्त्वयुक्तौ संभूषितौ सदसि चेरतुरात्मलाभौ ॥ ५८

आधाय वह्निमथ तत्र जुहाव सम्य-
ग्गृह्योक्तमार्गमनुसृत्य स विश्वरूपः ।
लाजाञ्जुहाव च वधूः परिजिघ्रति स्म
धूमं प्रदक्षिणमथाकृत सोऽपि चाग्निम् ॥　　५९

होमावसानपरितोषितविप्रवर्यः प्रस्थापिताखिलसमागतबन्धुवर्गः ।
संरक्ष्य वह्निमनया सममग्निगेहे दीक्षाधरो दिनचतुष्कमुवास हृष्टः ॥ ६०

प्रतिष्ठमाने दयिते वरेऽस्मिन्नुपेत्य मातापितरौ वरायाः ।
आभाषिषातां शृणु सावधानो बालेव बाला न तु वेत्ति किञ्चित् ॥ ६१

बालैरियं क्रीडति कन्दुकाद्यैर्जातक्षुधा गेहमुपैति दुःखात् ।
एकेति बाला गृहकर्म नोक्ता संरक्षणीया निजपुत्रितुल्या ॥ ६२

बालेयमङ्ग वचनैर्मृदुभिर्विधेया कार्या न रूक्षवचनैर्न करोति रुष्टा ।
केचिन्मृदूक्तिवशगा विपरीतभावाः केचिद्विहातुमनलं प्रकृतिं जनो हि ॥

कश्चिद् द्विजातिरधिगम्य कदाचिदेनामुद्वीक्ष्य लक्षणमवोचदनिन्दितात्म ।
मानुष्यमात्रजननं निजदेवभावेत्यस्माच्च वो वचनमुग्रमयोज्यमस्याम् ॥

सर्वज्ञतालक्षणमस्ति पूर्णमेषा कदाचिद्वदतोः कथायाम् ।
तत्साक्षिभावं व्रजिताऽनवद्या संदिश्य नावेत्रमसौ जगाम ॥ ६५

श्वश्रूर्वराया वचनेन वाच्या स्नुषाभिरक्षाऽऽयतते हि तस्याम् ।
निक्षेपभूता तव सुन्दरीयं कार्या गृहे कर्म शनैः शनैस्ते ॥ ६६

बाल्येषु बाल्यात्सुलभोऽपराधः स नेक्षणीयो गृहिणीजनेन ।
वयं सुधीभूय हि सर्व एव पश्चाद्गुरुत्वं शनकैः प्रयाताः ॥ ६७

दृष्ट्वाऽभिधातुमनलं च मनोऽस्मदीयं
गेहाभिरक्षणविधौ न हि दृश्यतेऽन्यः ।
दृष्ट्वाऽभिधानफलमेव यथा भवेन्नो
ब्रूयात्तथेष्टजनता जननीं वरस्य ॥ ६८

वत्से त्वमद्य गमिताऽसि दशामपूर्वां तद्रक्षणे निपुणधीर्भव सुभ्रु नित्यम् ।
कुर्यान्न बालविहृतिं जनतोपहास्यां सा नाविवापरमियं परितोषयेत्ते ॥

पाणिग्रहात्स्वाधिपती समीरितौ पुरा कुमार्याः पितरौ ततः परम् ।
पतिस्तमेकं शरणं व्रजानिशं लोकद्वयं जेष्यसि येन दुर्जयम् ॥ ७०

पत्यावभुक्तवति सुन्दरि मा स्म भुङ्क्ष्व याते प्रयातमपि मा स्म भवेद्विभूषा ।
पूर्वापरादिनियमोऽस्ति निमज्जनादौ वृद्धाङ्गनाचरितमेव परं प्रमाणम् ॥

रुष्टे धवे सति रुषेह न वाच्यमेकं क्षन्तव्यमेव सकलं स तु शाम्यतीत्थम् ।
तस्मिन्प्रसन्नवदने चकितेव वत्से सिध्यत्यभीष्टमनघे क्षमयैव सर्वम् ॥

भर्तुः समक्षमपि तद्वदनं समीक्ष्य
वाच्यो न जातु सुभगे परपूरुषस्ते ।
किं वाच्य एष रहसीति तवोपदेशः
शङ्का वधूपुरुषयोः क्षपयेद्धि हार्दम् ॥ ७३

आयाति भर्तरि तु पुत्रि विहाय कार्य-
मुत्थाय शीघ्रमुदकेन पदावनेकः ।
कार्यो यथाभिरुचि हे सति जीवनं वा
नोपेक्षणीयमणुमात्रमपीह कं ते ॥ ७४

धवे परोक्षेऽपि कदाचिदेयुर्गृहं तदीया अपि वा महान्तः ।
ते पूजनीया बहुमानपूर्वं नो चेन्निराशाः कुलदाहकाः स्युः ॥ ७५

पित्रोरिव श्वशुरयोरनुवर्तितव्यं
तद्वन्मृगाक्षि सहजेष्वपि देवरेषु ।
ते स्नेहिनो हि कुपिता इतरेतरस्य
योगं विभिद्युरिति मे मनसि प्रतर्कः ॥ ७६

हितोपदेशे विनिविष्टमानसौ वधूवरौ राजगृहं समीयतुः ।
लब्धानुमानौ गुरुबन्धुवर्गतो बभूव संक्षोभयभारतीति ॥ ७७

सा भारती दुर्वसनेन दत्तं पुनः प्रसन्नेन पुराऽऽत्तहर्षा ।
शापावधिं संसदि वत्स्यते यत्सर्वज्ञतानिर्वहणाय साक्ष्यम् ॥ ७८

स भारतीसाक्षिकसर्वविन्त्रोऽप्यात्मीयशक्त्या शिशुवद्विभातः ।
स्वशैशवस्योचितमन्त्रकांक्षीत्स केशवो यद्वदुदारवृत्तः ॥ ७९

शैशवे स्थितवता चपलाशे शार्ङ्गिणेव वटवृक्षपलाशे ।
आत्मनीदमखिलं विलुलोके भाविभूतमपि यत्खलु लोके ॥ ८०

तं ददर्श जनताऽद्भुतबालं लीलयाऽधिगतनूतनदोलम् ।
वासुदेवमिव वामनलीलं लोचनैरनिमिषैरनुवेलम् ॥ ८१

कोमलेन नवनीरदराजिश्यामलेन नितरां समराजि ।
केशवेशतमसाऽधिकमस्य केशवेशचतुरास्यसमस्य ॥ ८२

शाक्तैः पाशुपतैरपि क्षपणकैः कापालिकैर्वैष्णवै-
रप्यन्यैरखिलैः खलैः खलु खिलं दुर्वादिभिर्वैदिकम् ।
पन्थानं परिरक्षितुं क्षितितलं प्राप्तः परिक्रीडते
घोरे संसृतिकानने विचरतां भद्रंकरः शङ्करः ॥ ८३

इति श्रीमाधवीये तत्तद्देवावतारार्थकः ।
संक्षेपशङ्करजये तृतीयः सर्ग आभवत् ॥
आदितः श्लोकाः 274.

## अथ चतुर्थः सर्गः ॥ ४ ॥

### कौमारचरितवर्णनम् ॥

अथ शिवो मनुजो निजमायया द्विजगृहे द्विजमोदमुपावहन् ।
प्रथमहायन एव समग्रहीत्सकलवर्णमसौ निजभाषिकाम् ॥ १

द्विसम एव शिशुर्लिखिताक्षरं गदितुमक्षमताक्षरवित्सुधीः ।
अथ स काव्यपुराणमुपाशृणोत्स्वयमवैत्किमपि श्रवणं विना ॥ २

अजनि दुःखकरो न गुरोरसौ श्रवणतः सकृदेव परिग्रही ।
सहनिपाठजनस्य गुरुः स्वयं स च पपाठ ततो गुरुणा विना ॥ ३

रजसा तमसाऽप्यनाश्रितो रजसा खेलनकाल एव हि ।
स कलाधरसत्तमात्मजो सकलाश्चापि लिपीरविन्दत ॥ ४

सुधियोऽस्य विदिद्युतेऽधिकं विधिवच्चौलविधानसंस्कृतम् ।
ललितं करणं घृताहुतिज्वलितं तेज इवाशुशुक्षणेः ॥ ५

उपपादननिर्व्यपेक्षधीः स पपाठाहृतिपूर्वकागमान् ।
अधिकाव्यमरंस्त कर्कशेऽप्यधिकांस्तर्कनयेऽत्यवर्तत ॥ ६

हरतस्त्रिदशेज्यचातुरीं पुरतस्तस्य न वक्तुमीश्वराः ।
प्रभवोऽपि कथासु नैजवाग्विभवोत्सारितवादिनो बुधाः ॥ ७

अमुकक्रमिकोक्तिधोरणीमुरगाधीशकथावधीरिणीम् ।
मुमुहुर्निशमय्य वादिनः प्रतिवाक्योपहतौ प्रमादिनः ॥　　८

कुमतानि च तेन कानि नोन्मथितानि प्रथितेन धीमता ।
स्वमतान्यपि तेन खण्डितान्यतियत्नैरपि साधितानि कैः ॥　　९

अमुना तनयेन भूषितं यमुनातातसमानवर्चसा ।
तुलया रहितं निजं कुलं कलयामास स पुत्रिणां वरः ॥　　१०

शिवगुरुः स जरंस्त्रिसमे शिशावमृत कर्मवशः सुतमोदितः ।
उपनिनीषितसूनुरपि स्वयं न हि यमोऽस्य कृताकृतमीक्षते ॥　　११

इह भवेत्सुलभं न सुतेक्षणं न सुतरां सुलभं विभवेक्षणम् ।
सुतमवाप कथञ्चिदयं द्विजो न खलु वीक्षितुमैष्ट सुतोदयम् ॥　　१२

मृतमदीदिहदात्मसनाभिभिः पितरमस्य शिशोर्जननी ततः ।
समनुनीतवती धवखण्डितां स्वजनता मृतिशोकहरैः पदैः ॥　　१३

कृतवतीं मृतचोदितमक्षमा निजजनैरपि कारितवत्यसौ ।
उपनिनीषुरभूत्सुतमात्मनः परिसमाप्य च वत्सरदीक्षणम् ॥　　१४

उपनयं किल पञ्चमवत्सरे प्रवरयोगयुते सुमुहूर्तके ।
द्विजवधूर्नियता जननी शिशोर्व्यधित तुष्टमनाः सह बन्धुभिः ॥　　१५

अधिजगे निगमांश्चतुरोऽपि स क्रमत एव गुरोः सषडङ्गकान् ।
अजनि विस्मितमत्र महामतौ द्विजसुतेऽल्पतनौ जनतामनः ॥　　१६

सहनिपाठयुता बहवः समं पठितुमैशत न द्विजसूनुना ।
अपि गुरुर्विशयं प्रतिपेदिवान्क इव पाठयितुं सहसा क्षमः ॥　　१७

अत्र किं स यदशिक्षत सर्वांश्चित्रमागमगणाननुवृत्तः ।
द्वित्रिमासपठनाद्भवद्यस्तत्र तत्र गुरुणा समविद्यः ॥　　१८

वेदे ब्रह्मसमस्तदङ्गनिचये गार्ग्यौपमस्तत्कथा-
तात्पर्यार्थविवेचने गुरुसमस्तत्कर्मसंवर्णने ।
आसीज्जैमिनिरेव तद्वचनजप्रोद्बोधकन्दे समो
व्यासेनैव स मूर्तिमानिव नवो वाणीविलासैर्वृतः ॥ १९

आन्वीक्षिक्यैक्षि तन्त्रे परिचितिरतुला कापिले काऽपि लेभे
पीतं पातञ्जलाम्भः परमपि विदितं भाट्टघट्टार्थतत्त्वम् ।
यत्तैः सौख्यं तदस्यान्तरभवदमलाद्वैतविद्यासुखेऽस्मि-
न्कूपे योऽर्थः स तीर्थे सुपयसि वितते हन्त नान्तर्भवेत्किम् ॥ २०

स हि जातु गुरोः कुले वसन्सवयोभिः सह भैक्षलिप्सया ।
भगवान्भवनं द्विजन्मनो धनहीनस्य विवेश कस्यचित् ॥ २१

तमवोचत तत्र सादरं यतिवर्यं गृहिणः कुटुंबिनी ।
कृतिनो हि भवादृशेषु ये वरिवस्यां प्रतिपादयन्ति ते ॥ २२

विधिना खलु वञ्चिता वयं वितरीतुं वटवे न शक्नुमः ।
अपि भैक्षमकिञ्चनत्वतो धिगिदं जन्म निरर्थकं गतम् ॥ २३

इति दीनमुदीरयन्त्यसौ प्रददावामलकं व्रतीन्दवे ।
करुणं वचनं निशम्य सोऽप्यभवज्ज्ञाननिधिर्दयार्द्रधीः ॥ २४

स मुनिर्मुरभित्कुटुम्बिनीं पदचित्रैर्नवनीतकोमलैः ।
मधुरैरुपतस्थिवांस्तवैर्द्विजदारिद्र्यदशानिवृत्तये ॥ २५

अथ कैटभजित्कुटुम्बिनी तटिदुद्दामनिजाङ्गकान्तिभिः ।
सकलाश्च दिशः प्रकाशयन्त्यचिरादाविरभूत्तदग्रतः ॥ २६

अभिवन्द्य सुरेन्द्रवन्दितं पदयुग्मं पुरतः कृताञ्जलिम् ।
ललितस्तुतिभिः प्रहर्षिता तमुवाच स्मितपूर्वकं वचः ॥ २७

विदितं तव वत्स हृद्गतं कृतमेभिर्न पुरा भवे शुभम् ।
अधुना मदपाङ्गपात्रतां कथमेते महितामवाप्नुयुः ॥ २८

इति तद्वचनं स शुश्रुवान्निजगादाम्ब मयीदमर्पितम् ।
फलमद्य ददस्व तत्फलं दयनीयो यदि तेऽहमिन्दिरे ॥ २९

अमुना वचनेन तोषिता कमला तद्भवनं समन्ततः ।
कनकामलकैरपूरयज्जनताया हृदयं च विस्मयैः ॥ ३०

अथ चक्रभृतो वधूमये सुकृतेऽन्तर्धिमुपागते सति ।
प्रशशंसुरतीव शङ्करं महिमानं तमवेक्ष्य विस्मिताः ॥ ३१

दिवि कल्पतरुर्यथा तथा भुवि कल्याणगुणो हि शङ्करः ।
सुरभूसुरयोरपि प्रियः समभूदिष्टविशिष्टवस्तुदः ॥ ३२

अमरस्पृहणीयसम्पदं द्विजवर्यस्य निवेशमात्मवान् ।
स विधाय यथापुरं गुरोः सविधे शास्त्रवराण्यशिक्षत ॥ ३३

वरमेनमवाप्य भेजिरे परभागं सकलाः कला अपि ।
समवाप्य निजोचितं पतिं कमनीया इव वामलोचनाः ॥ ३४

सरहस्यसमग्रशिक्षिताखिलविद्यस्य यशस्विनो वपुः ।
उपमानकथाप्रसङ्गमप्यसहिष्णुश्रियमन्वपद्यत ॥ ३५

जयति स्म सरोरुहप्रभामदकुण्ठीकरणक्रियाचणम् ।
द्विजराजकरोपलालितं पदयुग्मं परगर्वहारिणः ॥ ३६

जलमिन्दुमणिं स्रवेद्यदि यदि पद्मं दृषदः ततः सरः ।
यदि तत्र भवेत्कुशेशयं तदमुष्यांघ्रितुलामवाप्नुयात् ॥ ३७

पादौ पद्मसमौ वदन्ति कतिचिच्छ्रीशङ्करस्यानघौ
वक्त्रं च द्विजराज-मण्डलनिभं नैतद् द्वयं साम्प्रतम् ।
प्रेष्यः पद्मपदः किल त्रिजगति ख्यातः पदं दत्तवा-
नम्भोजे द्विजराजमण्डलशतैः प्रेष्यैरुपास्यं मुखम् ॥ ३८

मुहुः सन्तो नैजं हृदयकमलं निर्मलतरं
विधातुं योगीन्द्राः पदकमलमस्मिन्निदधति ।
दुरापां शक्राद्यैर्वमति वदनं यन्नवसुधां
ततो मन्ये पश्चात्पदमधिकमिन्दोश्च वदनम् ॥ ३९

तत्वज्ञानफलेग्रहिर्घनतरव्यामोहमुष्टिंधयो
निःशेषव्यसनोदरंभरिरघप्राग्भारकूलंकषः ।
लुण्टाको मदमत्सरादिविततेस्तापत्रयारंतुदः
पादः स्यादमितंपचः करुणया भद्रंकरः शङ्करः ॥ ४०

पादाघातस्फोटव्रणकिणितकार्तान्तिकभुजं
प्रघाणव्याघातप्रणतविमतद्रोहबिरुदम् ।
परं ब्रह्मैवासौ भवति तत एवास्य सुपदं
गतापस्मारार्तीञ्जगति महतोऽद्यापि तनुते ॥ ४१

प्राप्तस्याभ्युदयं नवं कलयतः सारस्वतोज्जृम्भणं
स्वालोकेन विधूतविश्वतिमिरस्यासन्नतारस्य च ।
तापं नस्त्वरितं क्षिपन्ति घनतापन्नं प्रसन्ना मुने-
राह्लादं च कलाधरस्य मधुराः कुर्वन्ति पादक्रमाः ॥ ४२

नतिर्दत्ते मुक्तिं नतमुत पदं वेति भगव-
त्पदस्य प्रागल्भ्याज्जगति विवदन्ते श्रुतिविदः ।
वयन्तु ब्रूमस्तद्भजनरतपादाम्बुजरजः-
परीरम्भारम्भः सपदि हृदि निर्वाणशरणम् ॥ ४३

लांशुकपल्लवावृतं विलसासोरुयुगं विपश्चितः ।
[तार्णवफेनमञ्जरीच्छुरितैरावतहस्तशस्तिभृत् ॥ ४४

द् हाटकवल्लरीत्रयीघटिता स्फाटिककूटभृत्तटी ।
टमस्य तया कटीतटी तुलिता स्यात्कलितत्रिमेखला ॥ ४५

आदाय पुस्तकवपुः श्रुतिसारमेकहस्तेन वादिकृततद्गनकण्टकानाम् ।
उद्धारमारचयतीव विबोधमुद्रामुद्बिभ्रता निजकरेण परेण योगी ॥ ४६

सुधीराजः कल्पद्रुमकिसलयाभौ करवरौ
करोत्येतौ चेतस्यमलकमलं यत्सहचरम् ।
रुचेश्चोरावेतावहनि किमु रात्राविति भिया
निशादेरामातर्निजदलकवाटं घटयति ॥ ४७

रुचिरा तदुरस्थलीं बभावररस्फालविशालमांसला
धरणीभ्रमणोदितश्रमात्पृथुशय्येव जयश्रियाऽऽश्रिता ॥ ४८

परिघप्रथिमापहारिणौ शुशुभाते शुभलक्षणौ भुजौ ।
बहिरन्तरशत्रुनिग्रहे विजयस्तंभयुगीधुरन्धरौ ॥ ४९

उपवीतममुष्य दिद्युते बिसतन्तुक्रियमाणसौहृदम् ।
शरदिन्दुमयूखपाण्डिमातिशयोल्लङ्घनजाङ्घिकप्रभम् ॥ ५०

समराजत कण्ठकम्बुराड् भगवत्पादमुनेर्यदुद्भवः ।
निनदः प्रतिपक्षनिग्रहे जयशङ्खध्वनितामविन्दत ॥ ५१

अरुणाधरसंगताऽधिकं शुशुभे तस्य हि दन्तचन्द्रिका ।
नवविद्रुमवल्लरीगता तुहिनांशोरिव शारदी छविः ॥ ५२

सुकपोलतले यशस्विनः शुशुभाते सितभानुवर्चसः ।
वदनाश्रितभारतीकृते विधिसङ्कल्पितदर्पणाविव ॥ ५३

समासीत्तस्यास्यं सुकृतजलधेः सर्वजगतां
पयःपारावारादजनि रजनीशो बहुमतात् ।
सुधाधारोद्गारः सुसदृगनयोः किन्तु शशभृ-
त्सतां तेजःपुञ्जं हरति वदनं तस्य दिशति ॥ ५४

पुरा क्षीराम्भोधेरहह तनया यद्विषयता-
जुषो दीनस्याग्रे घनकनकधाराः समकिरत् ।
इदं नेत्रं पात्रं कमलनिलयाप्रीतिविततेः
र्मुनीशस्य स्तोतुं कृतसुकृत एव प्रभवति ॥ ५५

दुर्वारप्रतिपक्षदूषणसमुन्मेषक्षितौ कल्पने
सेतोरप्यनघस्य तापसकुलैणाङ्कस्य लङ्कारयः ।
अपन्नानतिकायविभ्रममुषः संसारिशाखामृगान्
पुष्णन्त्यच्छपयोऽब्धिवीचिवदलङ्काराः कटाक्षाङ्कुराः ५६

निःशङ्कक्षतिरूक्षकण्टककुलं मीनाङ्कदावानल-
ज्वालासंकुलमार्तिपङ्किलतरं व्यध्वं धृतिध्वंसिनम् ।
संसाराकृतिमापयच्छलचलद्दुर्वारदुर्वारणं
मुष्णन्ति श्रममाश्रिता नवसुधावृष्ट्याायिता दृष्टयः ॥ ५७

त्रिपुण्ड्रं तस्याहुः सितभसितशोभि त्रिपथगां
कृपापारावारं कतिचन मुनिं तं श्रितवतीम् ।
वयं त्वेतद् ब्रूमो जगति किल तिस्रः सुरुचिरा-
स्त्रयीमौलिव्याकृत्युपकृतिभवाः कीर्तय इति ॥ ५८

असौ शंभोर्लीलावपुरिति भृशं सुन्दर इति
द्वयं सम्पत्येतज्जनमनसि सिद्धं च सुगमम् ।
यदन्तः पश्यन्तः करणमदसीयं निरुपमं
तृणीकुर्वन्त्येते सुषममपि कामं सुमतयः ॥ ५९

अज्ञानान्तर्गहनपतितानात्मविद्योपदेशै-
स्त्रातुं लोकान्भवदवशिखातापपापच्यमानान् ।
मुक्त्वा मौनं वटविटपिनो मूलतो निष्पतन्ती
शम्भोर्मूर्तिश्चरति भुवने शङ्कराचार्यरूपा ॥ ६०

उच्चण्डाहितवादकुहनापाण्डित्यवैतण्डिकं
जाते देशिकशेखरे पदजुषां सन्तापचिन्तापहे ।
कातर्यं हृदि भूयसाऽकृत पदं वैभाषिकादेः कथा-
चातुर्यं कलुषात्मनो लयमगाद्वैशेषिकादेरपि ॥ ६१

अमुना क्रतवः प्रसाधिताः क्रतुविभ्रंशकरः स शङ्करः ।
इयमेव भिदाऽनयोर्जितस्मरयोः सर्वविदोर्बुधेड्ययोः ॥ ६२

कलयाऽपि तुलानुकारिणं कलयामो न वयं जगत्त्रये ।
विदुषां स्वसमो यदि स्वयं भविता नेति वदन्ति तत्र के ॥　　६३

धुवनान्त इवामरद्रुमा अमरद्रुष्विव पुष्पसञ्चयाः ।
भ्रमरा इव पुष्पसञ्चयेष्वतिसंख्याः किल शङ्करे गुणाः ॥　　६४

कामं वस्तुविचारतोऽच्छिनदयं पारुष्यहिंसाक्रुधः
　क्षान्त्या दैन्यपरिग्रहानृतकथालोभांस्तु सन्तोषतः ।
मात्सर्यं त्वनसूयया मदमहामानौ चिरं भावित-
　स्वान्योत्कर्षगुणेन तृप्तिगुणतस्तृष्णां पिशाचीमपि ॥　　६५

कामं यस्तु समूलघातमवधात्स्वर्गापवर्गापहं
　रोषं यः खलु चूर्णपेषमपिषन्निःशेषदोषावहम् ।
लोभादीनपि यः परांस्तृणसमुच्छेदं समुच्चिच्छिदे
　स्वस्यान्तेवसतां सतां स भगवत्पादः कथं वर्ण्यते ॥　　६६

केऽमी कान्त दिवा निशाकरकरा घर्मस्य मर्मच्छिदो
　मुग्धे शम्भुनवावतारसुगुरोरेते गुणानां गणाः ।
कस्मादुत्पलसन्ततिर्विकसिता विस्मेरदिग्योषिता-
　मेषाऽगाङ्गझरीति दिग्गजवधूप्रश्नोत्तरे रेजतुः ॥　　६७

नाक्ष्णा माक्षिकमीक्षितं क्षणमपि द्राक्षा मुहुः शिक्षिता
　क्षीरेक्षू समुपेक्षितौ भुवि यया सा शङ्करश्रीगुरोः ।
कान्तानन्तदिगन्तलङ्घनकलाजङ्घालतत्तद्गुण-
　श्रेणी निर्भरमाधुरीमदधुरा धन्येति मन्यामहे ॥　　६८

क्षान्तिश्चेद्वसुधा जहातु महतीं सर्वंसहत्वप्रथां
　विद्याश्चेद्विरहन्तु षण्मुखमुखाः स्वाखर्वगर्वावलीम् ।
वैराग्यं यदि बादरायणियशः कार्श्यं परं गाहतां
　किं जल्पैर्मुनिशेखरस्य न तुलां कुत्रापि मन्यामहे ॥　　६९

या मूर्तिः क्षमया मुनीश्वरीमयी गोत्रासगोत्रायते
　विद्याभिर्निरवद्यकीर्तिभिरलं भाषाविभाषयते ।

भक्ताभीप्सितकल्पनेन नितरां कल्पादिकल्पायते
कस्तां नान्यपृथग्जनैस्तुलयितुं मन्दाक्षमन्दायते ॥ ७०

न बभूव पुरातनेषु तत्सदृशो नाद्यतनेषु दृश्यते ।
भविता किमनागतेषु वा न सुमेरोः सदृशो यथा गिरिः ॥ ७१

समशोभत तेन तत्कुलं स च शीलेन परं व्यरोचत ।
अपि शीलमदोपि विद्यया ह्यपि विद्या विनयेन दिद्युते ॥ ७२

सुयशःकुसुमोच्चयः श्रयद्विबुधालिर्गुणपल्लवोद्गमः ।
अवबोधफलः क्षमारसः सुरशाखीव रराज सूरिराट् ॥ ७३

न च शेषभवी न कापिली गणिता काणभुजी न गीरपि ।
फणितिष्वितरासु का कथा कविराजो गिरि चातुरीजुषि ॥ ७४

भट्टभास्करविमर्ददुर्दशामज्जदागमशिरःकरग्रहा ।
हन्त शङ्करगुरोर्गिरः क्षरन्त्यक्षरं किमपि तद्रसायनम् ॥ ७५

जाटाटङ्कजटाकुटीरविहरन्नैलिम्पकल्लोलिनी-
क्षोणीशप्रियकृन्नवावतरणावष्टम्भगुम्फच्छिदः ।
गर्जन्तोऽवतरन्ति शङ्करगुरुक्षोणीधरेन्द्रोदरा-
द्वाणीनिर्झरिणीझराः क्व नु भयं दुर्भिक्षुदुर्भिक्षतः ॥ ७६

वारी चित्तमतङ्गजस्य नगरी बोधात्मनो भूपते-
र्दूरीभूतदुरन्तदुर्वदझरी हारीकृता सूरिभिः ।
चिन्तासन्ततितूलवातलहरी वेदोल्लसच्चातुरी
संसाराब्धितरीरुदेति भगवत्पादीयवाग्वैखरी ॥ ७७

कथादर्पोत्सर्पत्कथकबुधकण्डूलरसना-
सनालाधःपाते स्वयमुदयमन्त्रो व्रतिपतेः ।
निगुम्फः सूक्तीनां निगमशिखराम्भोजसुरभिः
जयत्यद्वैतश्रीजयबिरुदघण्टाघणघणः ॥ ७८

कस्तूरीघनसारसौरभपरीरंभप्रियंभावुका-
स्तापोन्मेषमुषो निशाकरकराहंकारकूलंकषाः ।
द्राक्षामाक्षिकशर्करामधुरिमग्रामाविसंवादिनो
व्याहारा मुनिशेखरस्य न कथंकारं मुदं कुर्वते ॥ ७९

अद्वैते परिमुक्तकण्टकपथे कैवल्यघण्टापथे
स्वाहंपूर्वकदुर्विकल्परहितप्राज्ञाध्वनीनाकुले ।
प्रस्कन्दन्मकरन्दवृन्दकुसुमस्रक्कोरणप्रक्रिया-
माचार्यस्य वितन्वते नवसुधासिक्ताः स्वयं सूक्तयः ॥ ८०

दूरोत्सारितदुष्टपांसुपटलीदुर्नीतयोऽनीतयो
वाता देशिकवाङ्मयाः शुभगुणग्रामालया मालयाः ।
मुष्णन्ति श्रममुल्लसत्परिमलश्रीमेदुरा मे दुरा-
यासस्याऽऽधिहविर्भुजो भवमये धीमान्तरे प्रान्तरे ॥ ८१

नृत्यन्त्या रसनाग्रसीमनि गिरां देव्याः किमङ्घ्रिक्वण-
न्मञ्जीरोर्जितसिञ्जितान्युत नितम्बालम्बिकाञ्चीरवाः ।
किं वल्गत्करपद्मकङ्कणझणत्कारा इति श्रीमतः
शङ्कामङ्कुरयन्ति शङ्करकवेः सद्युक्तयः सूक्तयः ॥ ८२

वर्षारम्भविजृम्भमाणजलमुग्गम्भीरघोषोपमो
वात्यातूर्णविघूर्णदर्णवपयःकल्लोलदर्पापहः ।
उन्मीलन्नवमल्लिकापरिमलाहंतानिहन्ता निरा-
तङ्कः शङ्करयोगिदेशिकगिरां गुम्फः समुज्जृम्भते ॥ ८३

हृद्या पद्यविनाकृता प्रशमिताविद्याऽमृषोद्या सुधा-
स्वाद्या माद्यदरातिचोद्यभिदुराऽभेद्या निषद्यायिता ।
विद्यानामनघोद्यमा सुचरिता साद्यापदुद्यापिनी
पद्या मुक्तिपदस्य साऽद्य मुनिवाङ्नुद्यादनाद्या रुजः ॥ ८४

आयासस्य नवाङ्कुरं घनमनस्तापस्य बीजं निजं
क्लेशानामपि पूर्वरङ्गमलघुप्रस्तावनाडिण्डिमम् ।

